# अथैकोनषष्टितमोऽध्यायः

*सनत्कुमार उवाच*

श्रृणु व्यास सुसंप्रीत्या चरितं परमेशितुः।
यथावधीत्स्वप्रियया दैत्यमुद्दिश्य संज्ञया॥ १
आस्तां पुरा महादैत्यो विदलोत्पलसंज्ञकौ।
अपुंवध्यौ महावीरौ सुदृप्तौ वरतो विधेः॥ २
तृणीकृतत्रिजगती पुरुषाभ्यां स्वदोर्बलात्।
ताभ्यां सर्वे सुरा ब्रह्मन् दैत्याभ्यां निर्जिता रणे॥ ३
ताभ्यां पराजिता देवा विधेस्ते शरणं गताः।
नत्वा तं विधिवत्सर्वे कथयामासुरादरात्॥ ४
इति ब्रह्मा ह्यवोचत्तान् देव्या वध्यौ च तौ ध्रुवम्।
धैर्यं कुरुत संस्मृत्य सशिवां शिवमादरात्॥ ५
भक्तवत्सलनामासौ सशिवाशंकरः शिवः।
शं करिष्यत्यदीर्घेण कालेन परमेश्वरः॥ ६

*सनत्कुमार उवाच*

इत्युक्त्वा तांस्ततो ब्रह्मा तूष्णीमासीच्छिवं स्मरन्।
तेऽपि देवा मुदं प्राप्य स्वं स्वं धाम ययुस्तदा॥ ७
अथ नारददेवर्षिः शिवप्रेरणया तदा।
गत्वा तदीयभवनं शिवासौन्दर्यमुज्जगौ॥ ८
श्रुत्वा तद्वचनं दैत्यावास्तां मायाविमोहितौ।
देवीं परिजिहीर्षू तौ विषमेषुप्रपीडितौ॥ ९
विचारयामासतुस्तौ कदा कुत्र शिवा च सा।
भविष्यति विधेः प्राप्तोदयान्नाविति सर्वदा॥ १०
एकस्मिन्समये शंभुर्विजहार सुलीलया।
कौतुकेनैव चिक्रीडे शिवा कंदुकलीलया॥ ११
सखीभिः सह सुप्रीत्या कौतुकाच्छिवसन्निधौ॥ १२
उदञ्चन्त्यञ्चदंगानां लाघवं परितन्वती।
निश्वासामोदमुदितभ्रमराकुलितेक्षणा॥ १३
भ्रश्यद्धम्मिल्लसन्माल्यस्वपुराकृतभूमिका।
स्विद्यत्कपोलपत्रालीस्त्रवदंबुकणोज्ज्वला॥ १४
स्फुटच्चोलांशुकपथतिर्यदंगप्रभावृता।
उल्लसत्कंदुकास्फालातिश्रोणितकराम्बुजा॥ १५
कंदुकानुगसद्दृष्टिनर्तितभ्रूलतांचला।
मृडानी किल खेलंती ददृशे जगदम्बिका॥ १६
अंतरिक्षचराभ्यां च दितिजाभ्यां कटाक्षिता।
क्रोडीकृताभ्यामिव वै समुपस्थितमृत्युना॥ १७
विदलोत्पलसंज्ञाभ्यां दृप्ताभ्यां वरतो विधेः।
तृणीकृतत्रिजगतीपुरुषाभ्यां स्वदोर्बलात्॥ १८
देवीं तां संजिहीर्षन्तौ विषमेषुप्रपीडितौ।
दिव उत्तेरतुः क्षिप्रं मायां स्वीकृत्य शांबरीम्॥ १९
धृत्वा पारिषदीं मायामायातामम्बिकान्तिकम्।
तावत्यन्तं सुदुर्वृत्तावतिचंचलमानसौ॥ २०
अथ दुष्टनिहंत्रा वै सावज्ञेन हरेण तौ।
विज्ञातौ च क्षणादास्तां चांचल्याल्लोचनोद्भवात्॥ २१
कटाक्षिताथ देवेन दुर्गा दुर्गतिघातिनी।
दैत्याविमाविति गणौ नेति सर्वस्वरूपिणा॥ २२
अथ सा नेत्रसंज्ञां स्वस्वामिनस्तां बुबोध ह।
महाकौतुकिनस्तात शंकरस्य परेशितुः॥ २३
ततो विज्ञाय संज्ञां तां सर्वज्ञार्द्धशरीरिणी।
तेनैव कंदुकेनाथ युगपन्निर्जघान तौ॥ २४
महाबलौ महादेव्या कंदुकेन समाहतौ।
परिभ्रम्य परिभ्रम्य तौ दुष्टौ विनिपेततुः॥ २५
वृन्तादिव फले पक्वे तालेनानिललोलिते।
दंभोलिना परिहते श्रृंगे इव महागिरेः॥ २६
तौ निपात्य महादैत्यावकार्यकरणोद्यतौ।
ततः परिणतिं यातो लिंगरूपेण कंदुकः॥ २७
कंदुकेश्वरसंज्ञं च तल्लिंगमभवत्तदा।
ज्येष्ठेश्वरसमीपे तु सर्वदुष्टनिवारणम्॥ २८

एतस्मिन्नेव समये हरिब्रह्मादयः सुराः।
शिवाविर्भावमाज्ञाय ऋषयश्च समाययुः॥ २९
अथ सर्वे सुराः शम्भोर्वरान्प्राप्य तदाज्ञया।
स्वधामानि ययुः प्रीतास्तथा काशीनिवासिनः॥ ३०
सांबिकं शंकरं दृष्ट्वा कृतांजलिपुटाश्च ते।
प्रणम्य तुष्टुवुर्भक्त्या वाग्भिरिष्टाभिरादरात्॥ ३१
सांबिकोऽपि शिवो व्यास क्रीडित्वा सुविहारवित्।
जगाम स्वालयं प्रीतः सगणो भक्तवत्सलः॥ ३२
कंदुकेश्वरलिंगं च काश्यां दुष्टनिबर्हणम्।
भुक्तिमुक्तिप्रदं सर्वकामदं सर्वदा सताम्॥ ३३
इदमाख्यानमतुलं शृणुयाद्यो मुदान्वितः।
श्रावयेद्वा पठेद्यश्च तस्य दुःखभयं कुतः॥ ३४
इह सर्वसुखं भुक्त्वा नानाविधमनुत्तमम्।
परत्र लभते दिव्यां गतिं वै देवदुर्लभाम्॥ ३५
इति ते वर्णितं तात चरितं परमाद्भुतम्।
शिवयोर्भक्तवात्सल्यसूचकं शिवदं सताम्॥ ३६

*ब्रह्मोवाच*

इत्युक्त्वामन्त्र्य तं व्यासं तनुतो मद्वरात्मजः।
ययौ विहायसा काशीं चरितं शशिमौलिनः॥ ३७
युद्धखंडमिदं प्रोक्तं मया ते मुनिसत्तम।
रौद्रीयसंहितामध्ये सर्वकामफलप्रदम्॥ ३८
इयं हि संहिता रौद्री सम्पूर्णा वर्णिता मया।
सदाशिवप्रियतरा भुक्तिमुक्तिफलप्रदा॥ ३९
इमां यश्च पठेन्नित्यं शत्रुबाधानिवारिकाम्।
सर्वान्कामानवाप्नोति ततो मुक्तिं लभेत ना॥ ४०

*सूत उवाच*

इति ब्रह्मसुतः श्रुत्वा पित्रा शिवयशः परम्।
शतनामाप्य शंभोश्च कृतार्थोऽभूच्छिवानुगः॥ ४१
ब्रह्मनारदसंवादः सम्पूर्णः कथितो मया।
शिवः सर्वप्रधानो हि किं भूयः श्रोतुमिच्छसि॥ ४२

*इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां पञ्चमे युद्धखण्डे विदलोत्पलदैत्यवधवर्णनं नामैकोनषष्टितमोऽध्यायः॥ ५९॥*

**॥ इति श्रीशिवमहापुराणे द्वितीयरुद्रसंहितायां पञ्चमो युद्धखण्डः समाप्तः॥**

**॥ समाप्तेयं द्वितीया रुद्रसंहिता॥ २॥**